अनन्तशयनसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ४४.

भट्टारकश्रीवेदोत्तमप्रणीतं

# तन्त्रशुद्धाख्यं प्रकरणं

संस्कृतग्रन्थप्रकाशनकार्याध्यक्षेण

त. गणपतिशास्त्रिणा

संशोधितम् ।

तच्च

अनन्तशयने

महामहिमश्रीमूलकरामवर्मकुलशेखरमहाराजशासनेन

राजकीयमुद्रणयन्त्रालये

मुद्रयित्वा प्रकाशितम् ।

कोलम्बाब्दाः १०९०, कैस्ताब्दाः १९१५.

# PREFACE.

This work is called Tantrasuddhi, as it establishes the 'Suddhi' or purity of the doctrines of Tantra. It raises all the arguments against the validity of the system of Pancharâtra Tantra, and refuting all of them maintains the authority of the system by cogent reasoning.

The author of this work is Bhattâraka Sri-Vedottama, and very little is known about his date and birth place. But considering the style and manner of the composition of the work, I think he might probably have flourished five or six centuries ago. The edition of this rare work is based on a manuscript kindly lent to me by the Raja of Idappalli. It is a palm leaf manuscript in Malayalam character and contains no errors.

Trivandrum, 22-7-1919. } T. GANAPATI SÂSTRÎ

# निवेदना।

---

तन्त्रस्य शुद्ध शुद्धिरिह स्थाप्यत इति तन्त्रशुद्धमिद प्रकरणमुच्यते। अत्र पाञ्चरात्रतन्त्रस्याप्रामाण्य बहुप्रकारमुद्भाव्य खण्डित, प्रामाण्य च प्रमाणन्याययुक्तिभिर्निपुणमुपपादितम्।

अस्य प्रणेता भट्टारकश्रीवेदोत्तमः कदा कस्मिन् देशे स्थित इति न ज्ञायते। किन्तु ग्रन्थगतवाक्यगुम्फगुणपर्यालोचनया पञ्चशतवर्षप्राचीन स मन्ये भवितुमर्हे। अपूर्वोऽय तन्त्रशुद्धग्रन्थस्तालपत्रात्मक केरलीयलिपि शुद्ध प्रतिरूपम् इडप्पळ्ळिराजमकाशाल्लब्धमवलम्ब्य सशोधित।

अनन्तशयनम्
१९.१५-७-२२

त. गणपतिशास्त्री.

॥ श्रीः ॥

श्रीभट्टारकश्रीवेदोत्तमप्रणीतं

# तन्त्रशुद्धाख्यं प्रकरणम् ।

---

अलक्षितं यत्पदमन्तरिक्षे
भुवस्तलं वै यदधश्चकार ।
बिभेद यच्चाण्डकपालमूर्ध्वं
तत् पातु विश्वं पदमच्युतस्य ॥

इह पञ्चरात्रतन्त्रं विषयः । तत् किं प्रमाणमप्रमाणं वेति संशयः । किमत्र संशयकारणम् । उभयपक्षगता युक्त्योऽनिर्धारितविशेषाः संशयकारणम् । तत्र त्रयीविद्भिरत्यन्तम् अपरिगृहीतत्वाद् धर्मप्रमाणत्वेन शिष्टैः परिगृहीतचतुर्दशविद्यास्थानेषु पञ्चरात्रतन्त्रस्यापरिगणितत्वाच्च त्रयीबाह्यशाक्यदिगम्बरपाशुपतादितन्त्रवत् पञ्चरात्रतन्त्रमप्यप्रमाणमिति पूर्वः पक्षः । सर्वलोकादर्शभूतनारदादिशिष्टजनपरिगृहीतत्वात् परिगणितशास्त्रानन्तर्भूतत्वेऽपि द्वैपायनवाल्मीकिप्रणीतभारतरामायणादिग्रन्थवत् प्रमाणत्वोपपत्तेर्वेदसंयोगिमनुगौतमादिपुरुषप्रणीतवचनवत् पञ्चरात्रतन्त्रमपि प्रमाणमिति सिद्धान्तः ।

ननु न स्मृतिर्वेदवन्निरपेक्षं प्रमाणं, मूलप्रमाणसापेक्षत्वात् । पूर्वविज्ञानसापेक्षविज्ञानं स्मृतिरित्युच्यते ।

तस्याश्च पूर्वविज्ञानप्रामाण्योपाधिकमेव प्रामाण्यं, न स्वतः । सर्वाण्येव हि स्मरणानि प्रत्यक्षादिप्रमाणावगतमेवार्थं समर्पयन्ति । तदिह परमनिःश्रेयसादेर्भगवदाराधनादेश्च साध्यसाधनसम्बन्धं न प्रत्यक्षादीनि प्रमाणानि समर्पयितुं शक्नुवन्ति । नापि शब्दः, तदनुपलम्भात् । न च पञ्चरात्रस्मृतिस्तन्मूलश्रुत्या व्याप्ता, येन पञ्चरात्रस्मृत्या तन्मूलश्रुतिरनुमीयेत । यथैव खलु पञ्चरात्रप्रतिपादितदेवताराधनतत्फलावाप्त्योश्च साध्यसाधनसम्बन्धभावो नानुमानगम्यः सम्बन्धादर्शनादेव, तथा तन्मूलश्रुतिरपि नानुमेया सम्बन्धादर्शनादेव । न चागमेन तन्मूलश्रुतिबोधः । आगमो हि द्विविधः पौरुषेयोऽपौरुषेयश्च । न तावत् पौरुषेयागमबलेन तन्मूलश्रुत्यवबोधः सम्भवति विप्रलब्ध्याशङ्कया । दृश्यन्ते ह्यनागमिकानप्यर्थान् आगमाध्यारोपेण केचिदध्वत्वे विलपन्तः । तेन पञ्चरात्रस्मृतिप्रणेतृभिरपि तन्मूलश्रुतिमुपलभ्य वेदमूलत्वं प्रतिज्ञातं स्वनिबन्धनानाम् आहोस्विदनुपलभ्यैव श्रद्धेयवाक्यत्वार्थमिति भवति सन्देहः, तावता च प्रामाण्यविघातात् । नाप्यपौरुषेयागमबलान्मूलश्रुत्यवबोधः, तदनुपलम्भात् । न हि कश्चिदपौरुषेयागमः पञ्चरात्रस्मृतिमूलश्रुतिप्रतिपादक उपलभ्यते । तस्मान्नागमेनापि मूलोपलब्धिः । नाप्युपमानेन मूलोपलब्धिः, सदृशानिरूपणात् । नाप्यर्थापत्त्या तदुपलब्धिः, स्मृतेः श्रुत्या विनानुपपत्तेरभावात् । स्मृतिस्त्वनुपपद्यमाना मूलमात्रं कल्पयति न प्रमाणभूतां श्रुतिं, तया विना स्मृतेरनुपपत्त्यभा-

वात्, भ्रान्त्यापि स्मरणोपपत्तेः । तस्मान्नार्थापत्त्यापि मूलश्रुतिप्रसिद्धिः । तस्मादभिप्रेतश्रुतिमूलत्वासम्भवाद् भ्रान्तिमूलत्वसम्भवाच्च निर्मूलैवैषा पञ्चरात्रस्मृतिरिति सिद्धम् । अपिच वेदमूलाः पञ्चरात्रस्मृतयः परिकल्प्यन्ते । तदार्थस्मरणवदीदृशवेदवाक्यमुपलभ्य नारदादिभिः ऋषिभिः पञ्चरात्रस्मृतयः प्रणीता इत्यपि पारम्पर्येण स्मर्येत, न च स्मर्यते । तथाप्येता(दृशा)र्थस्मरणस्य प्रयोजनवत्त्वान्मूलस्मरणस्य च विफलत्वादनादृतं तैरिति । तदयुक्तम् । न हि यत्कृतं प्रामाण्यं तदेव विस्मर्तुं युज्यते, अर्थस्मृतेः स्वतःप्रामाण्याभावात् । सर्वैश्च सम्प्रतिपन्नमेतद्, यद् वेदमूलत्वज्ञानाद् विना न प्रामाण्यं निश्चीयत इति । एवं च सति कथं तन्त्रं ते नारदादयः कुर्युः । अथोच्येत—नारदादिभिरप्यर्थमात्रमेवान्येभ्योऽधिगतं, न मूलभूतं वेदवाक्यं दृष्टमिति । तर्हि तैरप्यन्येभ्यस्तैरप्यन्येभ्योऽर्थमात्रमवगतं, न केनापि वेदवाक्यमुपलब्धमित्यन्धपरम्परावन्निर्मूलसम्प्रदायत्वप्रसङ्गान्निर्मूला इमाः पञ्चरात्रस्मृतयः प्रसज्येरन् । अथ प्रलीनशाखान्तरमूलता कल्प्येत, तदा सर्वासां बुद्धादिस्मृतीनामपि तद्द्वारं प्रामाण्यं प्रसज्येत । यस्य यदभिप्रेतं स तत् प्रलीनशाखामस्तके निक्षिप्य प्रमाणीकुर्यात् । अथ विद्यमानशाखागता एवैतेऽर्थाः, तदा नारदादय इव सर्वे पुरुषास्तत एवोपलभेरन्निति स्मृतिप्रणयनवैयर्थ्यं स्यात् । अपि च कीदृशाद् वेदवाक्यादिदं नारदादिभिः प्रतिपन्नं, किं विधिपरादुतार्थवादसरूपादित्यपि न ज्ञायते । न च नारदादिवचनादेव

मूलं निश्चिनुमः, तेऽपि हि निर्मूलमपि विप्रलम्भकतया लोकं प्रतारयितुमेवं वदेयुः । तस्मादप्रमाणं पञ्चरात्रस्मृतिरिति सिद्धम् । तदुक्तं—

"धर्मस्य शब्दमूलत्वादशब्दमनपेक्ष्यं स्यात्"
(जै० १. ३. १) इति ॥

अत्रोच्यते । पञ्चरात्रस्मृतिः प्रमाणम्, अनुभवपूर्वकत्वात् स्मृतेः । न चाननुभूय स्वयमर्थं कश्चित् पुरुषः स्मर्तुं प्रभवति । अनुभवस्य च संप्रयोगादीनि प्रसिद्धानि कारणानि । तेषां चातीन्द्रियार्थेऽसम्भवादनुभवकारणं चोदनैवेति पारिशेष्यात् कल्प्यते । सम्भाव्यते च नारदादीनां पूर्वविज्ञानकारणत्वेन चोदना । उक्तं च—

"उपपन्नो वेदसंयोगस्त्रैवर्णिकानाम्"

इति । यानि पुनरनुपपन्नवेदसंयोगानां बुद्धादीनामतीन्द्रियार्थस्मरणानि, तेषां मूलकल्पनावेलायां चोदना सम्भावनापदवीमपि नारूढेति भ्रान्तिमूलतैव तेषां परिकल्प्यते ।

यदुक्तं चोदनामूलत्वे चोदना किमिति नोपलभ्यत इति । नित्यानुमेयास्ता न कदाचिदुच्चार्यन्ते । कथमनुच्चारितानां मूलत्वमिति चेद्, नैष दोषः । पाठाविच्छेदवत् पारम्पर्येण स्मरणात् सिद्धेः । यथैव हि ग्रन्थसम्प्रदायाविच्छेदादस्तित्वसिद्धिः, तथैव नित्यानुमेयश्रुतिसम्प्रदायाविच्छेदादस्तित्वसिद्धिः ।

तदयुक्तमन्धपरम्परान्यायप्रसङ्गाद् (इति), या हि चोदना न कदाचिदुच्चार्यते, तस्याः सर्वपुरुषप्रत्यक्षादिप्रसराभावाद् दुर्लभतरमस्तित्वम् । तदा च स्मृतेरपि निर्मूलत्वं, ततो वरं प्रलीनश्रुत्यनुमानमेव । न च प्रलययोगो न संभाव्यते । दृश्यते हि प्रमादालस्यनिद्राभिः पुरुषक्षयाच्चानुपलब्धिः । अथ प्रलीनश्रुतिमूलत्वेन प्रामाण्ये बुद्धादिस्मृतीनामपि प्रामाण्यप्रसङ्ग इति । तन्न, वेदसंयोगाभावात् पुरुषस्मरणान्यथानुपपत्तिबाह्यत्वाच्छ्रुत्यनुमानस्य ।

अथवा विद्यमानशाखागतश्रुतिमूला इमाः स्मृतयः । न चास्माकमपि मूलश्रुत्युपलब्धिप्रसङ्गः, भिन्नप्रकरणपतितत्वात् पुरुषाणां प्रमादसंभवाद् विप्रकीर्णत्वाच्च शाखानां स्मृतिमूलं वचनमस्माभिर्नोपलभ्यते । किमर्थं वेदवाक्यान्येव तैर्नो संहृतानीति चेद्, उच्यते । यदि तावत् तान्येव वाक्यान्यध्यापयेयुः, तत्र(त?क्र)मान्यत्वात् स्वाध्यायविरोधः स्यात् । अनेन च दर्शनेनान्येऽप्यर्थवादोद्धरणेन विधिमात्रमेवाधीयीरन्, कर्मौपयिकमात्रं वा, तत्र वेदप्रलयः प्रसज्येत । न चावश्यं नारदादयः सर्वशाखाध्यायिनः, ते हि प्रयत्नेन शाखान्तराध्यायिभ्यः श्रुत्वार्थमात्रं स्ववाक्यैरपि स्मरणार्थं निबध्नीयुः। न च वाक्यविशेषापरिज्ञानमस्ति, स्मृतेर्विधिरूपत्वात् तन्मूलश्रुतिरपि तादृश्येव नार्थवादरूपेति निश्चिनुमः । अपिच विस्मरणमपि तेषां संभाव्यते । दृश्यते हि अद्यत्वेऽप्यस्मरणं ग्रन्थांश(श्च?स्य) । यदा तु शाखान्तरेषु विद्यन्त एताः श्रुतयः,

तदापि कस्यां शाखायां क वा पठ्यन्त इत्यस्यांशस्य वि(वि?स्म)रणाद् वैदिकत्वमात्रं प्रामाण्यसिद्धये स्मरन्ति । तद्विशेषपरिज्ञानं पुनरनौपयिकत्वादनादृतं तैः । तस्माद् वेदमूलत्वात् पञ्चरात्रस्मृतिः प्रमाणमिति सिद्धम् । तदुक्तं —

"अपि वा कर्तृसामान्यात् प्रमाणमनुमानं स्यात्"
(जै० १.३.२)

इति । स्मृतिः प्रमाणमित्युक्तम् । इदमिदानीं विचार्यते— किं प्रत्यक्षविरोधेऽपि स्मृतिः प्रमाणम्, उताप्रमाणमिति । किं पुनरत्र संशयकारणम्। उच्यते। उभयत्र युक्तिस्फुरणमन्यतरयुक्तिप्राबल्यानवधारणं च । एकस्मिन् धर्मिणि विरुद्धधर्मोपस्थापकप्रत्यक्षानुमितश्रुतिजनितविज्ञानयोर्वैदिकत्वाविशेषे तुल्यबलत्वात् प्रत्यक्षश्रुतिविरोधेऽपि स्मृतेः प्रामाण्यमिति प्रामाण्ये युक्तिः । तयोर्वैदिकत्वाविशेषेऽपि कॢप्तश्रुतिजनितविज्ञानेन शीघ्रजन्मनापहृतविषयत्वात् कल्प्यश्रुतिजनितविज्ञानस्य मन्थरजन्मनः प्रामाण्यं नास्तीति अप्रामाण्ये युक्तिः ।

आस्तां विरोधसिद्धवत्कारेण प्रामाण्याप्रामाण्यचिन्ता । विरोध एव कयोः कुत्र वेति विमर्शनीयम् । न तावत् स्वसामग्रीजन्मविज्ञानयोः प्रमितौ विरोधः, स्वतःप्रामाण्याभ्युपगमात् । स्वत एव हि सर्वेषां विज्ञानानां प्रामाण्यमिति मीमांसकस्थितिः । तद्धि स्वतःप्रामाण्यं, यद् ज्ञानकारणस्यैव प्रामाण्यकारणत्वम् । अस्मान्न प्रमितौ विरोधः । (ना)पि प्रयोगे, प्रमाणविज्ञानानां स्वविषये प्रवृत्तिनिवृत्त्युपेक्षाप्रसवहे-

तुल्यात् । अत्रोच्यते । प्रमितौ प्रयोगे च विरोधोऽस्ति । प्रमितौ तावद् बाध्यबाधकभावाभ्युपगमादस्त्येव विरोधः । प्रयोगेऽप्येकस्मिन् प्रयुज्यमाने इतरस्य प्रयोक्तुमशक्यत्वात् स्पष्ट एव विरोधः ।

अपर आह—प्रत्यक्षानुमितश्रुतिबलत्वेन* पुरुषान्तरप्रत्यक्षश्रुतिबलत्वेन* वा तुल्यबलत्वात् श्रुतिस्मृत्योः न तावद् विरोधः समस्ति । किन्तु श्रुत्योरेव तु परस्परविरोधः । तत्र च विकल्पः अविरोधो वा विषयव्यवस्थया विषयनानात्वेन वा तयोः । यद्वा प्रयोगविषये तयोर्विरोधः । सर्वथापि श्रुतिस्मृत्योर्विरोधस्य (त)दैव निषिद्धत्वात् तत्सिद्धवत्कारेण प्रामाण्याप्रामाण्यविचारो नारम्भणीय इति ।

अपिच केचित् परिहारमाचक्षते—अस्मिन् पक्षे त्रयीबाह्यशाक्यदिगम्बरपाशुपतादिग्रन्थविषया विरोधसिद्धवत्कारेण प्रामाण्याप्रामाण्यचिन्तेति । अन्यद् दर्शनं —श्रौतस्मार्तविज्ञानयोः पुनरयमेव विशेषः, यदुत प्रत्यक्षानुमितश्रुतिमूलत्वात् तन्मूलत्वकृतः कश्चिद्विशेषोऽस्ति । अनेनैव तयोर्विरोधे प्रामाण्याप्रामाण्यचिन्तेति ।

किं तावत् प्राप्तं, विरोधेऽपि प्रमाणं स्मृतिरिति । कुतः, पूर्वमेव स्मृतिप्रामाण्यस्य साधितत्वात् । अन्यथा हि सैव स्मृतिः प्रमाणमप्रमाणमिति विरुद्धमुक्तं स्यात्; श्रुतिमूलत्वे प्रमाणं तद्विरुद्धत्वे भ्रान्तिलोभादिमूलत्वमिति स्मृतिप्रामाण्यमनवस्थितमेव स्यात् । अपिच परस्परवि-

* बल मूलम् ।

रुद्धार्थप्रतिपादकत्वं श्रुतीनां यदि न स्यात्, तदा श्रुतिविरुद्धस्मृतेर्मूलान्तरकल्पना स्यात् । यदा तु श्रुतयोऽपि परस्परविरुद्धार्थाः प्रतीयन्ते 'उदिते जुहोति' 'अनुदिते जुहोति', 'अतिरात्रे षोडशिनं गृह्णाति' 'नातिरात्रे षोडशिनं गृह्णाति' इति, तदा कासाञ्चित् स्मृतीनां प्रत्यक्षश्रुतिवचनविरुद्धार्थानाम् अप्रत्यक्षश्रुतिवचनमूलानाम् अधीतवाक्यविरोधदर्शनमात्रेण वेदसंयोगिपुरुषस्मरणोपस्थापितपुरुषान्तरप्रत्यक्षश्रुतिनिराकरणमयुक्तम् ।

"न चैकं प्रति शिष्यते" (जै० २. ४. १८)

इति सर्वश्रुतीनां सर्वपुरुषान् प्रति प्रामाण्यमविशिष्टम् । तस्मात् प्रत्यक्षश्रुतिवचनानां परस्परविरुद्धार्थत्वेऽपि यथैव प्रामाण्यं, तथैव प्रत्यक्षानुमितश्रुतिवचनानामपीत्यभ्युपगन्तव्यम् । तेन स्मृतीनां सर्वदा प्रामाण्यमेव ग्राह्यम्, अप्रामाण्यमेव वा; न पुनः प्रत्य(क्षश्रुत्य)विरोधे प्रामाण्यं तद्विरोधे त्वप्रामाण्यमित्यर्धजरतीयं लभ्यम् । अपिच वेदविरुद्धत्वज्ञानवन्तोऽपि स्मर्तारस्तन्त्रे दृश्यन्ते । तत्र तत्कर्तॄणां वेदमूलत्वबलं मुक्त्वा किमन्यत् स्मरणकारणं संभवति । न च लोभादिदृष्टकारणत्वेनाप्रामाण्यमुच्येत, समस्तस्मृत्यप्रामाण्यप्रसङ्गात् । क वा दृष्टकारणत्वं नोत्प्रेक्षितुं शक्यं सन्दिग्धत्वं वा कथञ्चिदिति । तथा च लोकायतिकाः सर्वमेव दृष्टार्थं वैदिकं कर्मादृष्टार्थमाचक्षते; विरोधमपि केनापि निमित्तेन कल्पयन्ति । तस्मात् क्वचिद् दृष्टार्थत्वादिना स्मृत्यप्रामाण्येऽङ्गीकृते सर्वत्र तद्योजनेनाप्रामाण्यं नास्तिकाः कल्पयन्ति । अतो मीमांसकैर्नास्तिकानां न प्रस-

रो देयः। अपिच यदि वेदः श्रुतिविरुद्धमर्थं न प्रतिपादयति, यदि वा दृष्टार्थं, तदा श्रुतिविरुद्धार्थप्रतिपादिका दृष्टार्था च स्मृतिः श्रुतिमूलतां जह्यात्। यदा वेदेनापि (हन्तिविष्टयादिकर्म?) ऋत्विग्भ्यो दक्षिणादानमित्येवमादिकं कर्म दृष्टार्थं विधीयते, तदा न दृष्टार्थत्वेनावैदिकत्वम् अप्रामाण्यं वा वक्तुं शक्यम्। तस्माद् वेदमूलत्वमेव स्मृतीनां निर्वोढव्यं, न पुनर्दृष्टार्थत्वादिना स्मृतिप्रामाण्यमपलपनीयम्। तस्मात् स्मृतिप्रामाण्यस्य प्रसाधितत्वाद् वेदविरोधेऽपि अविशिष्टमासां प्रामाण्यमिति युक्तम्।

अत्रोच्यते—श्रुतिविरोधे स्मृतिप्रामाण्यमनपेक्ष्यं, तदविरोधे श्रुतिमूलत्वेन स्मृतेः प्रामाण्यम्। याः काश्चन वेदविरुद्धाः स्मृतयः, ताः सर्वा भ्रान्तिमूला न श्रुतिमूलाः। न स्वतन्त्रतया स्मृतीनां प्रामाण्यमस्ति। वेदमूलत्वानुमानं च न, प्रत्यक्षश्रुतिविरोधात्। तावदेव स्मृतिवचनानां स्वमूलभूतश्रुत्यनुमापकत्वं, यावत् प्रत्यक्षश्रुत्या तदर्थो नापहृतः। अपहृते तु स्वविषये नानुमानमात्मानमेव लभते। एकस्मिन् धर्मिणि विरुद्धधर्मोपस्थापकविज्ञानयोरेकेन शीघ्रगामिना प्रथममेव स्वविषये समर्पिते पश्चाद्भाविमन्थरगामिविज्ञानस्य न स्वविषयसमर्पकत्वं, प्राच्यविज्ञानेनैवापहृतविषयत्वात्। यत्र पुनः शीघ्रगामि विज्ञानमुत्तरविज्ञानविषयापहारकं नास्ति, तत्र मन्थरमपि गच्छद् विज्ञानं न निवार्यते। न हि येन विज्ञानेन कदाचित् प्रामाण्यं लब्धं, तेन तत् सर्वदा

लभ्यमितीदमीश्वराज्ञासिद्धम्। सर्वमेव विज्ञानमुत्पद्यमानं स्वविरोधिना बलीयसा विज्ञानेन यन्न विरुध्यते, तस्य स्यादेव विज्ञानस्यात्मलाभः। यस्य तूत्पद्यमानस्य मूलमेव केनचिदपह्रियते, न तस्य कदाचिदप्यात्मलाभः सम्भवति। न च बलीयोरुद्धजन्मना विज्ञानेन बलवद्विरोधाभावेऽप्यात्मा न लब्धव्यः। नाप्यसति विरोधे लब्ध आत्मेति विरोधे सत्यपि तेनात्मा लब्धव्य इत्यत्र किञ्चन प्रमाणमस्ति, सर्वत्र चोत्सर्गापवादन्यायसम्भवात्। न च क्वचिदुत्सर्गः प्रदर्शित इति सर्वत्रापवादासम्भवः। तेनोत्सर्गापवादयोर्विषयौ विज्ञाय बाधोऽबाधो वा पण्डितैर्विवेचनीयः। न तु सामान्यदर्शनमात्रेण प्रामाण्याप्रामाण्यव्यवहारः। यो हि सामान्यतोदृष्टिमात्रेण व्यवहरति, तस्य मृगतृष्णिकासलिलेनापि तृष्णिवृत्तिः स्यात्, सलिलपानस्य तृष्णिवृत्तिसाधनत्वात्। अथ मृगतृष्णिकासलिलपानस्यातृष्णिवृत्तिसाधनत्वात् तृषितस्य परमार्थसलिलमपि तृष्णिवृत्तिसाधनं न स्यात्। तावदेव हि सलिलविज्ञानस्य प्रामाण्यं, यावन्न सलिलमिदं मृगतृष्णिकेयमिति बाधः। एवं तावदेव श्रुत्यनुमानपूर्वकं स्मृतिप्रामाण्यं, यावत् प्रत्यक्षश्रुत्या स्मृतेर्विषयापहारः। अतः क्वचित् स्मृतेः प्रामाण्यं क्वचिदप्रामाण्यं च न्यायैर्व्यवस्थापयतां नार्धवैशसप्रसङ्गः। तस्मादेव न वक्तव्यं सर्वासां स्मृतीनां प्रामाण्यमेवाभ्युपगन्तव्यं, न पुनः कस्याश्चित् प्रामाण्यं कस्याश्चिदप्रामाण्यमभ्युपगन्तव्यमिति। तस्मात् प्रत्यक्षश्रुत्या श्रुत्यनुमानस्य वि-

रुद्धत्वाद् वेदविरुद्धस्मृतीनां वेदमूलत्वासम्भवाद् भ्रान्तिमूलत्वसम्भवादनपेक्षणीयाः सर्वा एव वेदविरुद्धाः स्मृतय इति सिद्धम्।

आह— श्रुतिस्मृत्योर्विकल्प आश्रीयतां व्रीहियवश्रुत्योरिव, न पुनरत्यन्तबाध आश्रयणीयः।

अत्रोच्यते— तुल्यबलविकल्पोऽपि तावदष्टदोषदुष्टत्वादगतिकगतिन्यायेन क्वचिदाश्रीयते। तत्र विषमशिष्टविकल्पाश्रयणस्य कः प्रसङ्गः। स्मृतिरतावत् श्रुतिवन्न निरपेक्षतया धर्मे प्रमाणं, येन विकल्पपदवीं व्रजेत्। सापेक्षप्रमाणत्वान्न स्मृतिः स्वतः प्रमाणपदवीमारूढा श्रुत्या च बाधिता जीवितुमेवाक्षमा कथं विकल्पपदवीं व्रजेत। तुल्यबलविकल्पस्य कथमष्टदोषदुष्टत्वमिति। तदुच्यते। 'व्रीहिभिर्यजेत', 'यवैर्यजेते'त्युभयमपि वाक्यं प्रमाणम्। तत्र व्रीहिवाक्याश्रयणे यववाक्यमनाश्रयणीयं भवति, अशक्यत्वाद् युगपदु, भयानुष्ठानस्य। तत्र प्राप्तं यववाक्यगतं प्रामाण्यं विना कारणेनापहातव्यम्; अप्रामाण्यस्य च प्रमाणत्वं षष्ठगोचरकल्पमभावप्रमाणावसेयमङ्गीकर्तव्यम्; एवमपि केनापि हेतुना प्रयोगसाधनत्वेन यवाभ्युपगमे पूर्वमपास्तस्य प्रामाण्यस्य पुनराश्रयणीयत्वं; तन्निरासेनाङ्गीकृतस्याप्रामाण्यस्य पुनः परित्याग इति चत्वारो दोषा एकस्मिन् वाक्ये प्रसज्यन्ते। द्वितीयेऽपि प्राप्तपरित्यागोऽप्राप्ताश्रयणं परित्यक्तोपादानं यत्नानीतस्य

परित्याग इति चत्वारो दोषाः । तथापि तुल्यबलत्वाद् गत्यन्तराभावाच्च व्रीहियवयोर्विकल्प आश्रितः । द्वयोरपि प्रमाणत्वादन्यतरप्राबल्यानवधारणाद् युगपदुभयानुष्ठानस्य चेश्वरेणापि कर्तुमशक्यत्वादुभयोरप्रामाण्यं प्रसक्तम् । (अ)प्रमाणत्वकल्पनमगतिका गतिः । सति गत्यन्तरे त्वप्रामाण्यकल्पनमयुक्तम् । तत्र द्वयोरप्रामाण्यकल्पनाद् वरमेकस्यैवाप्रामाण्यकल्पनं,

"सर्वनाशे समुत्पन्ने ह्यर्धं त्यजति पण्डितः"

इति न्यायात् ।

अपर आह — मा भूद् विकल्पोऽष्टदोषदुष्टत्वात् । समुच्चयोऽस्तु । मिश्रैर्यागः क्रियताम् । तथा च सति शास्त्रद्वयस्यापि प्रामाण्यमनुगृहीतं भवति, नान्यतरशास्त्रस्य प्रामाण्यपरित्यागः ।

अत्रोच्यते । मिश्रपक्षे शास्त्रद्वयस्यापि प्रामाण्यं प्रत्यस्तमियात्, शास्त्रद्वयेनापि निरपेक्षसाधनत्वावगमात् सापेक्षसाधनत्वावगमाच्च । तथाहि — व्रीहिशास्त्रं व्रीहीणां निरपेक्षयागसाधनत्वं प्रतिपादयति, यवशास्त्रमपि तथा । (वानं ?) तत्र मिश्रप्रयोगपक्षे नैव व्रीहिभिरिष्टं स्यान्नापि यवैः, निरपेक्षसाधनत्वप्रतिपादनपरत्वाच्छास्त्रद्वयस्यापि । तत्र शास्त्रद्वयस्यापि बाध एव कृतः स्यान्नानुग्रहः । अतः पापीयानयं मिश्रपक्षः । तस्मादुभयाप्रामाण्यकल्पनाद् वरमेकस्यैवाप्रामाण्यकल्पनमिति व्रीहियवश्रुत्योर्विकल्प आश्रितः । स च विकल्पपक्षो

दुष्ट एव, अव्यवस्थाप्रसङ्गात् । सा चाव्यवस्था न युक्ता । प्रमाणं प्रमाणमेव, अप्रमाणमप्यप्रमाणमेव, नानयोः कदाचिदपि स्वरूपविपर्यय इत्येकरूपत्वावधारणेन निरूपितरूपं व्यवहर्तुं शक्यं न पुनरनिरूपितरूपम् । तदेव कदाचित प्रमाणं कदाचिदप्रमाणमिति न कथञ्चिदपि विस्रम्भः स्यात् । एवं बहुदोषदुष्टोऽप्ययं विकल्पपक्षः पुनरत्यन्तापरिहार्यत्वात् व्रीहियवश्रुत्योरनुज्ञातः । श्रुतिस्मृत्योः पुनर्न कथञ्चिदपि विकल्पपक्षः सम्भवति, अतुल्यबलत्वात् । तस्माच्छ्रुतिस्मृत्योर्विरोधे स्मृतिजनितप्रत्ययस्य श्रुतिजनितप्रत्ययो बाधकः, बलवत्त्वात् । अतोऽनपेक्ष्यं प्रत्यक्षश्रुतिविरुद्धस्मृतिप्रामाण्यमिति सिद्धम् । तदुक्तं —

"विरोधे त्वनपेक्ष्यं स्यादसति ह्यनुमानम्" (जै० १. ३. ३)

इति । इतश्चानपेक्ष्यं प्रत्यक्षश्रुतिविरुद्धस्मृतिप्रामाण्यं, सम्भवन्मूलान्तरत्वात् । सम्भवति हि मूलान्तरं भ्रान्तिलोभादि प्रत्यक्षश्रुतिभग्नमूलायाः स्मृतेः । दृष्टमूलत्वसम्भवे च सति नादृष्टमूलत्वकल्पना युक्ता । अतः प्रत्यक्षश्रुतिविरोधे स्मृतिरेव बाध्यते, न श्रुतिः स्मृतिविरोधेऽपीति सिद्धम् । तदुक्तं —

"हेतुदर्शनाच्च" (जै० १. ३. ४)

इति । श्रुतिविरोधे स्मृतिगोचरं यदप्रामाण्यमभिहितं, तद् वेदसंयोगिपुरुषप्रणीतस्मृतिविषयं न भवति, पुरुषान्तरप्रत्यक्षशाखान्तरगतवचनमूलत्वात् तासाम् । अत एव भ्रान्तिलोभादि-

मूलतापि तासां न सम्भवति; किन्तु अप्रत्यक्षशाखान्तरगतवचनमूलास्ताः स्मृतय इत्येतावत् । यदा तु तान्यपि वचनानि प्रत्यक्षीभविष्यन्ति, तदा तुल्यबलत्वाद् विकल्पः ।

कथं तर्हीदं सूत्रं 'विरोधे त्वनपेक्ष्यं स्यादसति ह्यनुमानम्' इति । तत्रोच्यते — वेदबाह्यशाक्यदिगम्बरपाशुपतादिस्मृतिविषयं सूत्रम् । उक्तञ्च मनुना — 'या वेदबाह्यस्मृतयः' इति । अथवा वेदसंयोगिपुरुषप्रणीतस्मृतिविषयमेव सूत्रम् ।

ननु तासां श्रुतिमूलत्वे श्रुत्योरेव परस्परविरोधः, तत्र च तुल्यबलत्वाद् विकल्पे कथमप्रामाण्यमित्युक्तम् । तत्रोच्यते — स्वमूलश्रुतिकल्पनासव्यपेक्षमेव स्मृतिप्रामाण्यं, श्रुतेस्तु निरपेक्षमेव प्रामाण्यम् । सा च श्रुतिः स्वविरोधे कल्प्यश्रुतिमूलायाः (श्रु ? स्मृ) तेर्मूलकल्पनां निरुणद्धि । ततश्चाप्रामाण्यमुभयथापि । याः काश्चन श्रुतिविरुद्धस्मृतयः, ताः सर्वाः प्रमाणत्वेनानपेक्षणीया इति सिद्धम् ।

स्मृतिः प्रमाणमित्युक्तं, श्रुतिविरोधे स्मृतेरप्रामाण्यमपि वर्णितम् । इदमिदानीं विचार्यते — किं पञ्चरात्रस्मृतिः श्रुतिविरुद्धतया पाशुपतादिवद् वेदबाह्या, किं वा विरोधाभावान्मन्वादिस्मृतिवद् वेदानुसारिणीति । नन्वेवं संशयो

नोपपद्यते । कुतः, पञ्चरात्रतन्त्रस्य श्रुतिविरोधाभावात् । **कथं**, भगवानेवैको वासुदेवो जगत्प्रकृतिरधिष्ठाता चेति वेदसिद्धेश्वरप्रतिपादनात् । स च भोक्तुरात्मेति च तन्त्रेषु प्रतिपाद्यते । क्रियायोगो ज्ञानयोगश्च भगवतः प्राप्त्युपायत्वेन तन्त्रेषूपदिश्यते । अभिगमनोपादानेज्यास्वाध्याययोगैर्भगवन्तं वासुदेवं वर्षशतमनवरतमाराध्य क्षीणक्लेशो भगवन्तमेव प्रतिपद्यत इति च । तदेतत् सर्वं श्रुतिप्रसिद्धमेव । श्रुत्यनुसारिणी च स्मृतिः प्रमाणमिति मीमांसकानां स्थितिः । नैवं पाशुपतादितन्त्रेषु प्रतिपाद्यते । तत्र ह्यप्रकृतिरधिष्ठाता केवलं निमित्तकारणमीश्वरोऽनात्मभूतश्च प्रतिपाद्यते । सा चेयमीश्वरकल्पना वेदबाह्या । अपिच माहेश्वरास्तु मन्यन्ते—चतुर्विधा महेश्वरशासनानुसारिणः पाशुपताः शैवाः कालामुखाः कापालिकाश्चेति । तदेतेषां सर्वेषां भगवान् महेश्वरः परमगुरुः, यतस्तदुपदिष्टचर्यामार्गानुसारिण एते । तथाप्यन्योन्यं विप्रनिपद्यन्ते । तत्र पाशुपता मन्यन्ते—पशवः संसारिणः, तेषामधिपतिरीश्वरः पशूनां संसारिणामुपकाराय पञ्चाध्यायीशास्त्रं प्रणीतवान् । तत्र पञ्च पदार्था व्याख्यायन्ते कारणं कार्यं योगो विधिर्दुःखान्त इति । तत्र कारणं द्विविधं निमित्तमुपादानं च । निमित्तकारणम् ईश्वरादि । उपादानकारणमीश्वरकलाशब्दवाच्यं प्रधानम् । महदादि च कार्यम् । योगोऽपि—

"ओङ्कारमभिध्यायीत हृदि रुन्धीत धारणाम्"

इत्येवमुक्तः । विधिस्त्रिषवणस्नाने(ऽवगडुका?) प्रदानादिगूढ-

चर्यावसानः । 'दुःखान्तो मोक्ष' इत्यात्यन्तिकी दुःखनिवृत्ति-र्दुःखान्तशब्देनोच्यते । सैव दुःखनिवृत्तिर्मोक्षशब्देनोच्यते । मोक्षे (क?त)स्य च मुक्तस्येश्वरगुणसंक्रान्तिमिच्छन्ति । न पुनरसौ मुक्तात्मा जड एव पाषाणकल्पः, यथा वैशेषिकनैयायिकयोः । शैवाः पुनर्दीक्षापूर्वकतया परमेश्वराराधनं भुक्तिमुक्तिप्रदं मन्यन्ते; तथा मोक्षावस्थायां मुक्तात्मनां सर्वज्ञत्वमिच्छन्ति । तथा चाहुः—

"समे कर्मणि संजाते कालान्तरवशात् ततः ।
तीव्रशक्तिनिपातेन गुरुणा दीक्षितो यदा ॥
सर्वज्ञः स शिवो यद्वत् किञ्चिज्ज्ञत्वविवर्जितः ।
शिवत्वव्यक्तिसंपूर्णः संसारी न पुनस्तदा ॥"

इत्यादि । स्वयमेव साक्षान्महेश्वरो गरुडेन पृष्ट एवमाहेति । काळामुखाश्चाहुः—भस्मना स्नानं कपालभोजनमीश्वराराधनं लकुलधारणमित्यादिविशेषानुष्ठानाद् दृष्टादृष्टलक्षणपुरुषार्थावाप्तिरिति । कापालिकाश्च मुद्राषट्कपरिज्ञानात् तद्धारणाच्चापवर्गप्राप्तिरिति मन्यन्ते । तथा चाहुः—

"घण्टिका रुचकश्चैव कुण्डलं च शिखामणिः ।
भस्म यज्ञोपवीतं च मुद्राषट्कं प्रकीर्तितम् ॥
कपालमथ खट्वाङ्गमुपमुद्रे प्रकीर्तिते ।
आभिर्मुद्रितदेहस्तु न भूय इह जायते ॥"

इति । तान् ये(व?) नमस्कारादिभिः पूजयन्ति । तेऽपि सर्वकल्याणभाजो भवन्ति । किं पुनः परमेश्वरैकरूपा महाव्रतिन

इति भगवान् स्वयमेवाह महेश्वर इति चाहुः । सेयमन्योन्यविरुद्धचतुर्विधचर्याभेदकल्पना च त्रयी(भाग्या?बाह्या) न केवलमीश्वरकल्पनैव । न चैतदाशङ्कनीयं कथमियं वेदबाह्यप्रक्रिया भगवता महेश्वरेण विरचितेति, यतः केनचिदर्वाक्तनेन क्षेत्रज्ञेन महेश्वरसमाननाम्ना त्रयीमार्गबहिष्कृतेयं प्रक्रिया विरचिता । तन्नामसामान्येन केचिद् भ्रान्त्या महेश्वरनामकोपदिष्टमार्गमवलम्बितवन्तः।अतः पाशुपतादितन्त्रवत् पञ्चरात्रतन्त्रस्य न वेदबाह्यत्वम् । तस्मादुपपन्नेयं चिन्ता ।

**अत्रोच्यते**—भागवततन्त्रस्य वेदविरुद्धजीवोत्पत्त्याघनेकार्थप्रतिपादकत्वदर्शनात् तत्सामान्यात् त्रयीमार्गाविसंवादिसात्वतादितन्त्रान्तरेष्वप्यप्रामाण्याशङ्का नः समुपजायते । यदपि भगवदाराधनादिलक्षणं कर्म ज्ञानं च पञ्चरात्रतन्त्रेषूपदिश्यते, तदप्यनुपयोग्यम(नु?)विस्रम्भणीयं च श्वदृतिप्रक्षिप्तक्षीरवदिति शङ्कामहे । तस्मान्नानुपपन्नेयं चिन्ता ।

**किं तावत् प्राप्तम्** । पञ्चरात्रतन्त्रं वेदबाह्यमिति । कुतः, विरोधाधिकरणे तन्त्रटीकायां भट्टपादैः पञ्चरात्रतन्त्रस्य वेदबाह्यत्वेन परिगणितत्वाद् 'यान्येतानि त्रयीविद्भिर्न परिगृहीतानी'त्यादिना 'साङ्ख्ययोगपञ्चरात्रपाशुपतशाक्यादिग्रन्थपरिगृहीतधर्माधर्मनिबन्धनानी'त्येतन्मध्येन 'तस्माद्धर्मं प्रति त्रयीबाह्यमेवंजातीयकं प्रामाण्येनानपेक्ष्यं स्या'दित्यन्तेन ग्रन्थेन । अपि च पाञ्चरात्रिकाणां त्रैवर्णिकानां स्मार्तगर्भाधानादिसंस्कारसंस्कृतानाम् अग्निहोत्रदर्शपूर्णमास-

ज्योतिष्टोमादिश्रौतकर्मण्यधिकृतानामपि पुनर्भगवदाराधनाधिकारसिद्ध्यर्थं दीक्षादि संस्कारान्तरं वर्णयन्ति। यद्ययमपि वेदानुसारी मार्गस्तदा तैरेव संस्कारैः संस्कृतत्वाद् भगवदाराधनादिष्वप्यधिक्रियेरन्, किं संस्कारान्तरवर्णनेन। वर्णयन्ति च संस्कारान्तरम्। तन्नूनमवैदिकं पञ्चरात्रतन्त्रमिति मन्यामहे। शूद्रस्याप्यधिकारमाहुः; तस्मादप्यवैदिकत्वम्। वेदविरुद्धजीवोत्पत्त्यादिकथनादप्यवैदिकत्वम्। अपि च भगवता वेदव्यासेन 'उत्पत्त्यसम्भवाद्' (ब्र० २. २. ४२) इति पञ्चरात्राधिकरणे तद्दर्शनस्य निराकृतत्वात्, तर्कपादे बौद्धादिपरपक्षनिराकरणप्रकरणे निराकृतत्वात्,

"शैवं पाशुपतं चैव बौद्धमार्हतं तथा।
कापालं पाञ्चरात्रं च"

इति पाषण्डत्वेन स्मरणात्, चतुर्षु वेदेषु श्रेयोऽलब्ध्वा शाण्डिल्य इदं शास्त्रमधीतवानित्यादिवेदनिन्दादर्शनात्, शिष्टविगर्हितत्वाद्, वैदिकं तान्त्रिकमिति विभागकरणात्, शिष्टविगर्हितनिर्माल्यधारणनिवेद्यभक्षणाद्यङ्गीकरणात् पाशुपतादितन्त्रवत् पञ्चरात्रतन्त्रमपि वेदबाह्यमेवेति प्राप्तम्।

अत्रोच्यते। विरोधाधिकरणन्यायस्तु वेदबाह्यस्मृतिविषयो न पुनर्वेदसंयोगिपुरुषप्रणीतस्मृतिविषय इति न्यायविषयसमर्पणपरं भट्टपादीयं वचनं, न पुनः पञ्चरात्रस्य वेदबाह्यत्वप्रतिपादनपरं विरुद्धांशविषयं वा।

यदुक्तं संस्कारान्तरोपदेशादिति,. तत्रोच्यते। न सं-

स्कारभेदमात्रेण वैदिकत्वं विहन्यते, शिरोव्रतवदुपपत्तेः। यथैव ह्युपनीतत्रैवर्णिकस्य वेदाध्ययनेऽधिकृतस्यैव पुनर्मुण्डकोपनिषदध्ययने शिरोव्रतं नाम संस्कारः श्रूयते 'शिरोव्रतं विधिवद् यैस्तु चीर्णम्' (मुण्ड० ३.२.१०) इति, तथेहापि भविष्यति। फलान्तरकामस्य भगवदाराधनाधिकारसिद्ध्यर्थं यदि संस्कारान्तरं विधीयते, तदा को विरोधः। न च पूर्वेणास्य विरोधः, अधिकारिभेदेन संस्कारभेदोपपत्तेः। न च श्रौतस्मार्तसंस्कारः प्रतिषिध्यते, येन अवैदिकत्वमाशङ्क्येत। तस्मादुपनीतत्रैवर्णिकानां वैदिके कर्मण्यधिकृतानामपि संस्कारान्तरोपदेशादवैदिकत्वमिति यत्किञ्चिदेतत्।

शूद्रस्याप्यधिकारादवैदिकत्वमिति यदुक्तं, तदसत्, स्थपतीष्टिवदुपपत्तेः। यथैव हि 'निषादस्थपतिं याजयेदि'त्यत्र वाचनिकोऽधिकारः सिद्धः, तथेहापि भविष्यति। 'श्रावयेच्चतुरो वर्णानि'ति वचनादितिहासपुराणादौ यथैव शूद्रस्याप्यधिकारो न चावैदिकत्वं, तथात्रापि भविष्यति।

यत्तूक्तं, वेदविरुद्धजीवोत्पत्त्यादिकथनादवैदिकत्वमिति, तत्रोच्यते। नात्र जीवाद्युत्पत्तिः कदाचिदभिधीयते, किं तर्हि संकर्षणादिमूर्तित्रयस्य व्यूहरूपेणोत्पत्तिः। सा च भगवतो न विरुध्यते रामकृष्णादिप्रादुर्भाववत्। यथैव हि चराचरजीवभूतस्य भगवतो वासुदेवस्य स्वेच्छया रामकृष्णा-

दिप्रादुर्भावो न विरुध्यते, तथेहापि भविष्यति। तत्र जीवादिशब्दप्रयोगो व्यवहाराय साङ्केतिकः, नान्यथा। अन्यथा चतुर्णां वर्णानां यथाक्रमपूजार्थं वासुदेवादिमूर्तिचतुष्टयं कथं विनियुज्येत।

यत्तूक्तं, भगवता सूत्रकारेण निराकृतत्वादवैदिकत्वमिति, तत्रोच्यते। सकलपञ्चरात्रतन्त्रपरिश्रमरहितस्य तन्त्रैकदेशश्रवणमात्रेण विवक्षितार्थापरिज्ञानादतिकोमलचित्ततया यथाश्रुतमेवार्थं गृहीत्वा वासुदेवसंज्ञकात् परमात्मनः संकर्षणसंज्ञको जीव उत्पद्यते, तस्माच्च प्रद्युम्नसंज्ञकं मनः, तस्मादप्यनिरुद्धसंज्ञकोऽहंकार इति वेदविरुद्धार्थतामाचक्षते ये, तन्मतमपाकर्तुं विपुलमतिभिः सूत्रकारैरधिकरणमारब्धम् 'उत्पत्त्यसम्भवाद्' (ब्र० २. २. ४२) इति, न पुनः साक्षादेव पञ्चरात्रनिराचिकीर्षया।

यत् पुनरिदमुक्तं परपक्षनिराकरणपादे निराकृतत्वादिति, तदपि प्रसङ्गात् कृत्वाचिन्तया चेति परिहरामः।

यदपि शैवं पाशुपतमित्यादिस्मरणं, तदपसरणमिति ब्रूमः, वेदविरुद्धार्थवादित्वाभावात्। यथैव हि वेदेन प्रतिपाद्यते कूटस्थमद्वितीयमसङ्गं सर्वजीवप्रत्यगात्मस्वरूपं स्वमायावेशवशाज्जन्मनिमित्तोपादानकारणं ब्रह्मेति,

तथैव पाञ्चरात्रिकैरपि प्रतिपाद्यते। तस्माद् वेदविरोधाभावात् पञ्चरात्रस्मृतिः प्रमाणम्।

अनुमानाच्च, विवादास्पदीभूतं पञ्चरात्रं प्रमाणं, वेदानुसारित्वान्मन्वादिस्मृतिवदिति।

यः पुनरंशो विरुद्धवदवभासते, सोऽप्यविरोधेन व्याख्येयो यथा अर्थवादभागः। अत्र केचिदाहुः—विरोधाधिकरणन्यायेन वेदविरुद्धजीवोत्पत्त्यादिविषये सर्ववेष्टनस्मरणवदप्रमाणम्, अविरुद्धसर्वेश्वरतत्त्वनिरूपणतदाराधनादिविषये प्रमाणमष्टकादिस्मृतिवदिति। तदयुक्तमित्यपरे। कुतः, एकदेशस्य प्रामाण्यम् एकदेशस्य चाप्रामाण्यमभ्युपगच्छतामर्धजरतीयप्रसङ्गादनाश्वासप्रसङ्गाच्च। ननु पञ्चरात्राधिकरणे भाष्यकारैरप्युभयथाभावोऽङ्गीकृतः। नैवम्। अविरोधमेव ते मन्यन्ते। का तर्हि विरोधसिद्धवत्कारेण प्रवृत्तभाष्यसन्दर्भस्य गतिः। या खलु सूत्रस्य गतिः, सैव। ननु तर्हि तस्य वा का। उक्तमत्र विरुद्धार्थवाद्यभिप्रायेणाधिकरणारम्भ इति। तन्न प्रस्मर्तव्यम्।

अपि च, नारदप्रभृतयो देवर्षयः परमरहस्यविज्ञानं भगवन्नारायणमुखारविन्दादाकर्ण्य समाकलय्य सम्प्रदायं प्रवर्तितवन्त इति स्मर्यते—

"नारदः सुमहद्भूतं लोकानुग्रहकाम्यया।
वासुदेवादवाप्येदं सञ्चिक्षेप मतं परम्॥"

इत्यादि। तत्रैवं सति भगवन्नारायणप्रणीतं शास्त्रमेकदेशेन

प्रमाणमेकदेशेन चाप्रमाणमित्यभव्यानामेवैवं वाणी निस्सरीसर्ति। न चैतदाशङ्कितव्यं भगवत्प्रणीतत्वे प्रमाणं नास्तीति, यतः स्कन्दपुराणे स्मर्यते —

"सांख्यस्य कपिलो वक्ता पञ्चरात्रस्य केशवः।
वक्ता पञ्चपदार्थानां साक्षाद् देवो महेश्वरः॥"

इति। ननु भगवतोऽपि विप्लावकत्वेनापि प्रवृत्तिः सम्भाव्यते सर्वज्ञत्वेन व्यामोहासम्भवाद् †मायामोहवत्। सत्यं, यत्र वेदविरोधस्तत्र विप्लावकत्वकल्पना। इतरत्रासत्वमेव। प्रकृते पुनर्वेदविरोधाभावादाप्तिरेव भगवतः कल्प्यते, न विप्लावकत्वम्। नन्वन्य एव वासुदेवसमाननामा नारदनाम्ने प्रोक्तवान्। ततः समाननामनिबन्धनोऽयं विभ्रमः पाञ्चरात्रिकाणाम्। न, इत्थम्भावे प्रमाणाभावादन्यत्राप्यनाश्वासप्रसङ्गादप्रवृत्तिर्विश्वमाप्नोति। तस्मात् परमेश्वरप्रणीतत्वान्नारदप्रभृतिभिर्धर्मशास्त्रप्रणेतृभिः पञ्चरात्रशास्त्रसम्प्रदायस्य प्रवर्तितत्वात् प्रामाण्यमेवेति निश्चिनुमः।

अपि च, नहि पाञ्चरात्रिकाः पाशुपतादिवद् वेदस्य पौरुषेयत्वमप्रामाण्यं वा वदन्ति; नापि वेदप्रसिद्धवर्णाश्रमवृत्तिव्यतिरेकेण वर्णादीन् कल्पयन्ति। यथा दीक्षाप्रवेशमात्रेण ब्राह्मणा भवन्ति, कपालादिव्रतधारिणश्च यतयः, त्रिसन्ध्यं भस्मस्नानमेव न वारुणस्नानमित्यादि शिष्टबीभत्साकारं[§]

---

† मायामोहो नाम विष्णुना स्वशरीरात् सृष्टो दैत्यमोहनायेति कथा विष्णुपुराणे (३. १७) अनुसन्धेया। § बीभत्सा करोतीति कर्मण्यण्।

शैवादिभिः परिकल्प्यते, तथा न किञ्चिच्छिष्टबीभत्साकारं पाञ्चरात्रिकैः कल्प्यते। तस्मात् 'शैवं पाशुपतमि'त्यादिस्मरणमपस्मरणमिति सम्यगेवोक्तम्। यद्वा, यथाश्रुतजीवोत्पत्त्याद्यभिप्रायं स्मरणं भविष्यति।

यदपीदमुक्तं चतुर्षु वेदेषु परं श्रेयोऽलब्ध्वा शाण्डिल्य इत्यादिवेदनिन्दादर्शनादिति, तत्रोच्यते। नहि निन्दा निन्द्यं निन्दितुं प्रवर्तते, अपि तु निन्द्यादितरं प्रशंसितुम्। यथा बह्वृचब्राह्मणे—

"प्रातः प्रातरनृतं ते वदन्ति पुरोदयाज्जुह्वति येऽग्निहोत्रम्"

इत्यनुदितहोमनिन्दोदितहोमप्रशंसार्था, तथात्रापि पञ्चरात्रस्तुतिपरा सा। ननु तत्रानुदितहोमस्य ब्राह्मणान्तरे विहितत्वात् तथाभावः। इहापि तर्हि वेदस्य समग्रश्रेयस्साधनप्रतिपादकत्वेन संहितान्तरेषु अवधारितत्वादिति समानश्चर्चः। यथा वा महाभारते—

"चत्वार एकतो वेदा भारतं चैकमेकतः।
समागतैः सुरर्षिभिस्तुल्यारोपितं पुरा।
महत्त्वे च गुरुत्वे च ध्रियमाणं यतोऽधिकम्।
महत्त्वाच्च गुरुत्वाच्च महाभारतमुच्यते॥"

इति च महाभारतस्तुत्यर्थेति गृह्यते न वेदनिन्देति, तद्वदत्रापि भविष्यति।

यदपीदमुक्तं शिष्टविगर्हितत्वादिति, तद् विपरीतम्। सर्वदेशेषु श्रौतस्मार्तकर्मानुष्ठानकृद्भिः शिष्टैरेव परिगृहीत-

त्वादनुष्ठीयमानत्वाच्च।

यदपि वैदिकं तान्त्रिकमिति विभागकरणादिति, तदपि श्रौतं स्मार्तं गार्ह्यमितिवत् परिहरामः।

यदपीदमुक्तं शिष्टविगर्हितनिर्माल्यधारणनिवेद्यभक्षणाद्यङ्गीकरणादिति, तत्रोच्यते। किमिदं निर्माल्यं निवेद्यमिति च, किं कुसुमादिद्रव्यमात्रं विशिष्टद्रव्यं वा। न तावदाद्यः कल्पः, अनङ्गीकरणादतिप्रसङ्गाच्च। नापि द्वितीयः, विशेषानिरूपणात्। ननु देवतोद्देशेन परित्यागो विशेषणम्। न तर्हि निर्माल्यं निवेद्यं च परिहरणीयमनुत्सृष्टत्वात् तदुद्देशेन। (न)खलु मीमांस(को? कैः) पञ्चरात्रतन्त्रप्रतिपादिताया देवतात्वमङ्गीक्रियते, येन तदुद्देशेनोत्सृष्टत्वेन निर्माल्यं निवेद्यं च परिहरणीयं स्यात्। ननु भगवदुद्देशेन परित्यजन्ति पाञ्चरात्रिकाः कुसुमौदनादिद्रव्यम्। किं ततो मीमांसकमतानुसारिणाम्। अथ पाञ्चरात्रिकैरभ्युपगतत्वाद् मीमांसकैरप्यङ्गीक्रियते, तर्हि तन्त्रप्रामाण्यमप्यङ्गीक्रियताम्, अभ्युपगतप्रामाण्यत्वात् तन्त्रस्य तेषाम्। अथ अप्रमाणभूतमेव तन्त्रं पाञ्चरात्रिकैः प्रमाणबुद्ध्या परिगृहीतमिति न मीमांसकैः प्रमाणीक्रियते, तर्ह्यदेवतैव देवतात्वेन परिगृहीतेत्युपरम्यताम्। तस्मादप्रमाणभूततन्त्रसिद्धमन्त्रप्रतिष्ठापितप्रतिमासु देवताया अभावादप्रमाणभूततन्त्रप्रतिपाद्याया देवतात्वेनाभ्युपगमाच्च तदुद्देशत्यागयोरभावाद् विशिष्टद्रव्यानिरूपणात् केवलस्य चापरिहार्यत्वाद् निर्मूलैवैषा शिष्टविगर्हितता। तस्मान्मीमांसकैः स्वदृष्टिमनु-

सरद्भिर्निर्माल्यधारणनिवेद्यभक्षणाद्यगर्हणीयम्। तन्त्रप्रामाण्यमनुसरद्भिर्निर्माल्यधारणनिवेद्यभक्षणादि सुतरामगर्हणीयम्। अपिच, सोमभक्षवच्चेदं द्रष्टव्यम्। यथैव हि सर्वशास्त्रेषु प्रतिषिद्धमप्युच्छिष्टभक्षणं ज्योतिष्टोमादिविशिष्टकर्मण्यतिपावनतयाङ्गीक्रियते 'तेन सोमेनोच्छिष्टा भवन्ती'ति वचनाद् यथा वा प्रतिषिद्धमपि मत्स्यमांसादिभक्षणमष्टकादिविषये परमपावनतया वचनप्रामाण्यादङ्गीक्रियतेऽनुष्ठीयते च शिष्टैः, एवमत्रापि द्रष्टव्यम्। शब्दप्रमाणका हि वयं, यच्छब्द आह तदस्माकं प्रमाणम्। न चैतदाशङ्कितव्यं शब्द एवात्र नास्तीति, यस्माद् ब्रह्माण्डपुराणे पठ्यते —

"विष्णोर्निवेद्यं संशुद्धं मुनिभिर्भोज्यमुच्यते।
अन्यन्निवेद्यनिर्माल्याद् भुक्त्वा चान्द्रायणं चरेत्॥
विष्णुदेहपरामृष्टं माल्यं पापहरं शुभम्।
यो नरः शिरसा धत्ते स याति परमां गतिम्॥"

इति। तथा महाभारते श्रीनारायणीये पठ्यते—

"पाञ्चरात्रविदो मुख्यास्तस्य गेहे महात्मनः।
पावनं भगवत्प्रोक्तं भुञ्जते येऽग्रभोजनम्॥"

इति। तथा पञ्चरात्रसंहिताभेदे पठ्यते—

"उपभुक्तस्य सर्वस्य गन्धपुष्पादिकस्य च।
स्नानार्थमुपयुक्तस्य दधिक्षीरादिकस्य च॥
निर्माल्यबुद्ध्या दैवीयं पावनं दूषयन्ति ये।
ते यान्ति नरकं मूढास्तत्प्रभावापलापिनः॥"

इति।

ननु विहितत्वेऽपि निवेद्यभक्षणं नित्यं काम्यं वा । न तावन्नित्यम् अकरणे दोषाश्रवणात् । यदापि काम्यं, तदापि किं स्वयं भोजनान्तरमाक्षिप्य तत्र निवेद्यभक्षणं प्रापयति, उत सायंप्रातः प्रसिद्धभोजने तन्त्रेण प्रसङ्गेन वानुष्ठानं प्रापयति । न तावद्भोजनान्तरमाक्षिपति,

"सायंप्रातर्द्विजातीनामशनं श्रुतिचोदितम् ।
नान्तरा भोजनं कुर्याद्"

इत्यन्तराभोजनस्य प्रतिषिद्धत्वात् । नापि *तन्त्रः प्रसङ्गो वा विरोधात् । ननु कोऽयं विरोधः । अयं विरोधः — प्राणाग्निहोत्रहोमस्तावन्नित्यः, तदकरणे दोषश्रवणाद् द्विजातीनाम् । होमसाधनं च भक्तद्रव्यम् । तद् यदि निवेद्यभक्षणमपि चोदितं स्यात्, तदा तदपि निवेद्यद्रव्यं होमसाधनमहोमसाधनं वा स्यात् । द्वयी गतिः । अहोमसाधनत्वे तद्भक्षणमेव तावदालोचनीयम् । होमसाधनत्वं च नोपपद्यते, इष्टद्रव्यस्य पुनर्देवतान्तरोद्देशेन त्यागायोगात् । तस्मादत्र नित्यकाम्ययोर्विरोधो वर्णनीयः निवेद्यभक्षणं वा त्याज्यं, नान्तरा स्वान्तपरितोषो महताम् ।

अत्रोच्यते । निवेद्यभक्षणं काम्यमेवेति ब्रूमः, पापक्षयादिकामनाधिकारसंयोगात् । न स्वयमपि भोजनान्तरमाक्षिपति, उदाहृतमनुवाक्यविरोधात् । तत्र कामनाधिकारविधिप्रापितभोजने नित्यप्राणाग्निहोत्रहोमस्यापि काम्यनि-

* तन्त्रमिति स्यात् । उभयोद्देशेन सकृदनुष्ठानं तन्त्रम् । अन्योद्देशेनान्यदीयस्यापि सहानुष्ठानं प्रसङ्गः ।

त्याग्निहोत्रहोमयोरिव देशकालकर्त्रैक्यात् तन्त्र इति सिद्धान्तः। इष्टद्रव्यस्यापि पुनर्देवतान्तरोद्देशेन त्यागे न कश्चिद् विरोधः, प्राणादिदेवतानामपरमात्मरूपत्वाद् विष्वक्सेनवत्। यथैव हि भगवदुद्देशेन त्यक्तमपि कुसुमौदनादिद्रव्यं पुनर्विष्वक्सेनाय निवेद्यते, तद्वदत्रापि भविष्यति। अथ

"यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्।
यत् तपस्यसि कौन्तेय! तत् कुरुष्व मदर्पणम्॥"

इति न्यायेन परमात्माराधनमेव प्राणाग्निहोत्रहोमोऽप्याश्रीयते, तदा भगवदाराधनयोग्यद्रव्येण भगवन्तमाराध्य पुनर्भक्षयेन्निवेद्यमित्यलमतिविस्तरेण॥

तस्मात् पाञ्चरात्रतन्त्रं प्रमाणमिति सिद्धान्तः॥

इति श्रीभट्टारकश्रीवेदोत्तमविरचितं

तन्त्रशुद्धाख्यं प्रकरणं

समाप्तम्।

---

## Ready for sale.

| | RS. | AS. | P. |
|---|---|---|---|
| भक्तिमञ्जरी (Stuti) by H. H. Svâti Srî Râma Varma Mahârâjah. | 1 | 0 | 0 |

## Trivandrum Sanskrit Series.

| | | | |
|---|---|---|---|
| No. 1 — दैवम् (Vyâkarana) by Deva with Purushakâra of Krishnalîlâsukamuni. | 1 | 0 | 0 |
| No. 2 — अभिनवकौस्तुभमाला – दक्षिणामूर्तिस्तवः by Krishnalîlâsukamuni. | 0 | 2 | 0 |
| No. 3 — नलाभ्युदयः (Kâvya) by Vâmana Bhatta Bâna. | 0 | 4 | 0 |
| No. 4 — शिवलीलार्णवः (Kâvya) by Nîlakantha Dîkshita. | 2 | 0 | 0 |
| No. 5 — व्यक्तिविवेकः (Alankâra) by Mahima Bhatta with commentary. | 2 | 12 | 0 |
| No. 6 — दुर्घटवृत्तिः (Vyâkarana) by Saranadeva. | 2 | 0 | 0 |
| No. 7 — ब्रह्मतत्त्वप्रकाशिका (Vedânta) by Sadâsivendra Sarasvatî. | 2 | 4 | 0 |
| No. 8 — प्रद्युम्नाभ्युदयम् (Nâtaka) by Ravi Varma Bhûpa. | 1 | 0 | 0 |
| No 9 — विरूपाक्षपञ्चाशिका (Vedânta) by Virûpâkshanâtha with the commentary of Vidyâchakravartin. | 0 | 8 | 0 |
| No. 10 — मातङ्गलीला (Gajalakshana) by Nîlakantha. | 0 | 8 | 0 |
| No. 11 — तपतीसंवरणम् (Nâtaka) by Kulasekhara Varma with the commentary of Sivarâma. | 2 | 4 | 0 |
| No. 12 — परमार्थसारम् (Vedânta) by Bhagavad Adisesha with the commentary of Râghavânanda | 0 | 8 | 0 |
| No. 13 — सुभद्राधनञ्जयम् (Nâtaka) by Kulasekhara Varma with the commentary of Sivarâma | 2 | 0 | 0 |
| No. 14 — नीतिसारः (Niti) by Kâmandaka, with the commentary of Sankarârya. | 3 | 8 | 0 |
| No. 15 — स्वप्नवासवदत्तम् (Nâtaka) by Bhâsa. (Second Edition) | 1 | 8 | 0 |

No 16—प्रतिज्ञायौगन्धरायणम् (Do) Do. 1 8 0

No. 17—पञ्चरात्रम् (Do) Do 1 0 0

No. 18—नारायणीयम् (Stuti) by Narâyana Bhatta with the commentary of Desamangala Varya 4 0 0

No 19—मानमेयोदय (Mîmâmsâ) by Nârayana Bhatta and Narâyana Pandita 1 4 0

No 20—अविमारकम् (Nâtaka) by Bhâsa 1 8 0

No 21—बालचरितम् (Do) Do 1 0 0

No. 22—मध्यमव्यायोग दूतवाक्य दूतघटोत्कच कर्णभारोरुभङ्गानि (Nâtaka) by Bhasa 1 8 0

No 23—नानार्थार्णवसंक्षेप (Kosa) by Kesavaswâmin (1 & 2 Kândas) 1 12 0

No. 24—जानकीपरिणय (Kâvya) by Chakrakavi. 1 0 0

No 25—काणादसिद्धान्तचन्द्रिका (Nyaya) by Gangadharasuri 0 12 0

No 26—अभिषेकनाटकम् (Nataka) by Bhâsa 0 12 0

No 27—कुमारसम्भव (Kavya) by Kalidasa with the two commentaries, Prakâsikâ of Arunagiri nâtha and Vivarana of Nârayana Pandita (1 & 2 Sargas) 1 12 0

No 28—वैखानसधर्मप्रश्न (Dharmasutra) by Vikhanas 0 8 0

No 29—नानार्थार्णवसंक्षेप (Kosa) by Kesavaswâmin (3rd Kanda) 2 4 0

No. 30—वास्तुविद्या (Silpa) 0 12 0

No 31—नानार्थार्णवसंक्षेप (Kosa) by Kesavaswamin (4th, 5th, & 6th Kandas) 1 0 0

No 32—कुमारसम्भव (Kâvya) by Kâlidâsa with the two commentaries, Prakâsika of Arunagiri nâtha and Vivarana of Nârayana Pandita (3rd, 4th & 5th Sargas) 2 8 0

No 33—वररुचिसंग्रह (Vyakarana) with the commentary Dipaprabhâ of Nârâyana 0 8 0

No 34—मणिदर्पण (शब्दपरिच्छेद) (Nyaya) by Râjachudâmanimakhin 1 4 0

No 35—मणिसार (अनुमानखण्ड) (Nyâya) by Gopinatha 1 8 0

No 36—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyaṇa Pandita (6th, 7th & 8th sargas) 3 0 0

No. 37—आशौचाष्टकम् (Smriti) by Vararuchi with the commentary 0 4 0

No. 38—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the commentary Tîkâsarvasva of Sarvânanda (Ist Kânda) 2 0 0

No. 39—चारुदत्तम् (Nâtaka) by Bhâsa 0 12 0

No. 40—अलङ्कारसूत्रम् (Alankâra) by Râjânaka Srî Ruyyaka with the Alankârasarvaswa of Srî Mankhuka and its commentary by Samudrabandha 2 8 0

No 41—अध्यात्मपटलम् (Kalpa) by Âpastamba with Vivaraṇa of Srî Sankara Bhagavat Pada 0 4 0

No. 42—प्रतिमानाटकम् (Nataka) by Bhâsa 1 8 0

No 43—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the two commentaries, Amarakosodghatana of Kshiraswamin and Tikasarvaswa of Vandyaghatiya-Sarvananda (Par II. 2nd Kanda 1—6 Vargas) 2 8 0

No 44—तन्त्रशुद्धम् (Tantra) by Bhattaraka Sri Vedottama 0 4 0

*Apply to —*

*The Agent for the sale of*

*Government Sanskrit Publications,*

*Trivandrum*